Presented to Madam Dr. Usha Satyavrat Shastri as a mark of profound respects.
K.C. Acharya 6.2.92

Digitized By Siddhanta eGangotri Gyaan Kosha

# ସାମନ୍ତ ଚନ୍ଦ୍ରଶେଖର ପ୍ରଶସ୍ତିଃ

ରଚୟିତା

**ପଣ୍ଡିତ ଶ୍ରୀ ବନମାଳୀ ଆଚାର୍ଯ୍ୟ ଶର୍ମା**

ସାହିତ୍ୟ-ଧର୍ମଶାସ୍ତ୍ର-ସାଂଖ୍ୟଯୋଗାଚାର୍ଯ୍ୟଃ

ଖଣ୍ଡପଡନ ଦୁର୍ଗସ୍ଥ-ରମଚନ୍ଦ୍ର-ଉଚ୍ଚାଂଗ୍ଲ-ବିଦ୍ୟାଳୟସ୍ୟ

ପ୍ରାପ୍ତାବସରଃ ପ୍ରଧାନ ପଣ୍ଡିତଃ

ପ୍ରକାଶକଃ ତଦୀୟଃ ସୂନୁଃ

**ଡକ୍ଟର ଶ୍ରୀ କୃଷ୍ଣଚନ୍ଦ୍ର ଆଚାର୍ଯ୍ୟଃ**

ଉତ୍କଳ ବିଶ୍ୱବିଦ୍ୟାଳୟ ସ୍ନାତକୋତ୍ତର-ସଂସ୍କୃତ ବିଭଗସ୍ୟ ପ୍ରାଚାର୍ଯ୍ୟଃ

ପ୍ରଥମ ସଂସ୍କରଣମ୍

୧୯୯୧

ମୂଲ୍ୟମ୍ : ପଞ୍ଚବିଂଶତି ରୂପ୍ୟକାଣି

ମୁଦ୍ରାକର : ପ୍ରେସ ଅଭୀପ୍ସା, ଖାରବେଳ ନଗର, ଭୁବନେଶ୍ୱର

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

## मम वंशपरिचयः

आसीज्जगन्नाथ सुनामधारी
दामोदरोनाम तदीय पुत्रः
तस्यात्मनोऽजायत दीनबन्धु-
स्तत् पुत्रकोमे पितृ विश्वनाथः । १ ।

आसन्निमे ब्राह्मणकर्म धर्मे
लब्धप्रतिष्ठा नृपपूजनीयाः
श्रीविश्वनाथः कुलचन्द्रआसी-
त्तन्नन्दनोऽहं वनमालि नामा । २ ।

साहित्यपातञ्जल सांख्य धर्म-
शास्त्रार्जिताचार्यपदेन पाठ्याः
गीर्वाण वाण्योत्कल भाषयाच
ग्रन्था मया संरचिताः सुरम्याः । ३ ।

मदात्मजायुर्युत कृष्णचन्द्रः
सदा सुशिक्षार्जन कार्यदक्षः
पुर्युत्कलीयामर वाक्समित्याः
साहित्य आचार्यपदव्युपेतः । ४ ।

वाराणसी राजित हिन्दु विश्व-
विद्यालयाद् वैदिकवाग् विभागे
एम्.ए. परीक्षा प्रथमत्व लाभात्
सौवर्णमाप्नात् पदकं सुरम्यम् । ५ ।

अध्यक्षतादक्षतया विभागे
सुख्यातियुक्तः सुजन प्रशंस्यः
वाणीविहारोत्कल विश्वविद्या-
लयेऽधुना ध्यापकतां करोति । ६ ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



श्री श्रीनिवासोममपौत्र आदि-
विज्ञानवेत्ता खलु राजनीतौ
विख्यातरैभेन्स विशालविद्या-
लयेऽधुना शिक्षकतां करोति । ७ ।

द्वितीय पौत्रो मम रत्ननाभः
वैज्ञानिको वैद्युतिके विभागे
आन्ध्रे नियुक्त स्तड़ितीय कर्म
श्रीराम चन्द्राख्यपुरे करोति । ८ ।

तृतीय पौत्रो मम राजशेखरः
कृषिप्रसङ्गाध्ययनायनन्तरम्
जलीय विज्ञानमधीत्य वेङ्कके
स शिक्षकोऽष्ट्रेलियया नियुक्तः । ९ ।

पौत्रश्चतुर्थो ममपद्मनाभः
वैज्ञानिको यन्त्र विभागदक्षः
विज्ञान सत्सद्मनि तालचेरे
गुर्वाहृतः शिक्षकतां करोति । १० ।

मम तनूज तनूज तनूजनि-
र्नवसुजात सुजात सुजातकः
जयतु मङ्कल मङ्गल मङ्गल-
स्सुरगजीव तु जीवतु जीवतु । ११ ।

मम सनन्दन नन्दन नन्दन-
स्सुरभि चन्दन चन्दन चन्दनः
अमृत रोचन लोचन रोचनः
भवतु भासुर भासुरः । १२ ।

तस्य नाम सहि दिव्यदर्शनः
प्रज्ञयाधिगत वेददर्शनः
विश्व विश्व नतुल्य दर्शनः
ख्यातिमान् तु दूरदर्शनः । १३ ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



तृतीयपौत्र इति—अष्ट्रेलियया—लक्षणया अष्ट्रेलियासर्वकारेणे-ऽर्थः। ममेति—मम तनूजः—कृष्णचेन्द्रः तत्तनूजः—श्री श्रीनिवासः तत्तनूजनिः। नवः—नूतनः सुजातः—साधुत्पन्नः सुजातः सुन्दरः सुजात कः उत्तम जन्मपत्रिकायुक्तः। मङ्गले न सह वर्त्तमाना मङ्गला मङ्गल मङ्गला मङ्गलं मङ्गल मङ्गलया यस्य सः मङ्गल मङ्गल मङ्गलः। जयतु तु—पुनः सुरगजः—ऐरावतः अस्ति यस्य सः सुरगजी—इन्द्रः सइव जीवतु जीवतु वीप्सायां द्विरुक्तिः। सुरभिचन्दन चन्दन चन्दनः—सुरभि चन्दन सदृश आह्लादकोदीप्तिमांश्च। चदि आह्लादने दीप्तो च। अमृतरोचनः—सुधांशुः तद्वत् लोचनरोचनः। नेत्र रोचकः सः मम नन्दन नन्दन नन्दनः भासुरा देदीप्यमाना या भा दीप्तिः तया युक्तः यः सुरः तद्वत् भासुरः देदीप्यमानः भवतु। कोऽसावित्यपेक्षायां तस्य नाम दिव्यदर्शनः। अन्यत् सर्वं सुबोध्यम्।

**श्री वनमाली आचार्य शर्मा**



CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# ସୂଚୀ ପତ୍ରମ୍





CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# मुखवन्धः

जानन्त्येव तत्र-भवन्त: सुधियो भवन्तः षट्सु वेदाङ्गेषु ज्योतिः शास्त्रस्यान्यातमत्वं "विफलान्यन्यशास्त्राणि विवादस्तेषु केवलम् । सफलं ज्यौतिषं शास्त्रं चन्द्राकौं यत्र साक्षिणौ" इत्यादि तद्विषयक-प्रशंसावादं च । वस्तुत: ज्योति:शास्त्रस्य चन्द्राकौं मूलाधारभूतौ । चन्द्रार्कयोर्गतिविद्य-नुसारेण तत्संपर्कीयसूक्ष्मगणनामन्तरेण तिथ्यादि कालविचारभ्रान्त्या ज्योति:सिद्धान्त: समीचीनो नभवेत् । तेन श्रौत स्मार्त्तनित्यनैमित्तिकादि कर्मकलापेषु नानाविघ्नवाहुल्यात् महदनिष्टं संभवेत । एतत्सर्वं विचार्य लोकोपकरका ज्योति:शास्त्रपारदर्शिन: पूर्वाचार्या वहूनि ज्योति:सिद्धान्त-शास्त्राणि विरचितवन्त: ।

तेषु सूर्यसिद्धान्त:, ब्रह्मसिद्धान्त:, सोमसिद्धान्त:, लोमशसिद्धान्त: आर्यसिद्धान्तश्च प्रसिद्धा: । महासिद्धान्तकार: खीष्टीय पञ्चमशताव्दीलव्ध जन्मा पाटलिपुत्रनिवासी पण्ड़ितप्रवर आर्यभट्ट: पृथिव्या आन्हिकगते: प्रथम प्रवर्त्तक: । तं विना प्रायेण भारतीया ज्योतिर्विद्या विचक्षणा वराहमिहिर ब्रह्मगुप्त-श्रीपति-सुधाकर-शतानन्द-भास्कराचार्य-गणेश - कमला - करभट्ट-प्रमुखा ज्योतिर्ग्रन्थकर्त्तार: पृथिव्या गतिं न स्वीकुर्वन्ति स्म । पुरा पाश्चात्या विद्वांसोऽपि सूर्य: पृथिवीं परितोभ्रमतीति स्थिरीकृतवन्त: । किन्तु कोपर-निकसंनामा एको ज्योतिर्विद् पण्ड़ित: सप्रमाणं प्रोक्तवान् यत्सूर्य:स्थिरो वर्त्तते, पृथिवी तं परितो भ्रमति । एतेन तं गिर्जास्थधर्म्मप्राण पुरोहिता विषदृष्टया दृष्टवन्त: ।

तथा इटालिदेशीयो ब्रुनो नामक एको वैज्ञानिक: पण्ड़ित: पृथिवी सूर्यं परितो भ्रमतीति सप्रमाणं ब्रुवन् पुरोहितैर्दहने दाहयित्वा मारित: । गालिलिओ नामापर एको ज्योतिर्वित् पण्ड़ित आविष्कृतदूरवीक्षणयन्त्र: कृतपृथिवीभ्रमणप्रचारस्तत्कालीनतत्सर्वकारस्य विषदृष्टिपतितो भयेन पुन: स्वीकृत भूस्थिरत्वोऽपि कियद्दिनं कारारुद्धो वभूव ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



एतत्सर्वं घटनावलीमत्वेऽपि कालक्रमेण पाश्चात्यजगति प्रकाण्ड विज्ञानसाधकाः पण्डिताः कृतप्रबलयुक्तिप्रदर्शना भूभ्रमणवादं दृढतया स्वीकृतवन्तः ।

एवं पाश्चात्यसिद्धान्तस्य प्रायेण सार्द्धशतद्वयवर्षानन्तरं खण्डपत्तन नामधेये ब्रिटिशशासनाधीने क्षुद्रतमे करदराज्ये तद्राज्यराजवंशीयेन श्री नृसिंहसिंहमर्द्दराज-भ्रमरवर-राज-धरणीपाल - प्रियतम - पञ्चम - पुत्र श्री श्यामबन्धु सिंहनामन्ततनुजनुषा महामहोपाध्याय श्रीचन्द्रशेखर-सिंहसामन्त हरिचन्दन-महापात्र-महोदयेन विंशतिवर्षाणि ज्योतिर्गवेषणां कृत्वा सिद्धान्त दर्पण ग्रन्थरत्नं विरचय्य तत्र वहुयुक्ति प्रमाणप्रदर्शनपुरःसरं पाश्चात्य मतखण्डनम् आर्यभट्टादि मतनिरासं च विधाय भुवःस्थैर्यं तां परितः सूर्यस्य भ्रमणं समुद्घोषितम् । आह्वयते स्म च स भूभ्रमणमत-वादिनो वैज्ञानिकान् युक्तिभिस्तदीयमतखण्डनाय किन्तु केऽपिपण्डितास्तस्य पाण्डित्यप्रकर्षं सिद्धान्तदर्पणग्रन्थाज्ज्ञात्वा तेन सह युक्तिं कर्त्तुं साहसं न कृतवन्तः ।

कतिपये पाश्चात्यपण्डिता भारतीयविद्वासश्च त ज्योतिर्विषयक प्रश्नान् पृष्ट्वा लब्धतत्समीचीनोत्तराः परितोषंप्रापुः । अयं महापरितापस्य विषयो यत् चतुस्त्रिंशत्तमवयसा सामन्तेन समापितस्यापि ग्रन्थराजस्य सिद्धान्तदर्पणस्य मुद्रणं तत्रिंशद्वर्षानन्तरमभूत् । अस्माकं देशस्य ईदृशी अवस्था । गुणग्राहिणां वङ्गीयानां कलिकता-संस्कृत-महाविद्यालयाध्यक्षाणां विद्वद्वराणां श्रीमन्महेशचन्द्र-न्यायरत्न-महोदयानां कटकरेभेन्समा — महा-विद्यालय-विज्ञानाध्यापकानां श्रीमद्योगेशचन्द्र राय महोदयानां च सानुकूल्य-चेष्टया सिद्धान्तदर्पणग्रन्थमुद्रणं सामन्तस्य महामहोपाध्यायपदवीलाभ-श्चाभूताम् ।

श्रीसामन्तः ज्योतिःशास्त्रसमुज्जलपथप्रदर्शकस्य महामनीषिणः श्रीभास्कराचार्यस्यापि गणनायाःस्थूलत्वंप्रदर्श्य स्वग्रन्थे सूक्ष्मगणनां प्रतिपादितवान् । पूर्वं सिद्धान्तशास्त्रेषु चन्द्रसम्बन्धिस्थूलगणनया तिथ्यादिषु चतुर्दशदण्डात्मक प्रभेदं भूयोभूयः परिलक्ष्य स तद्विषयकसूक्ष्म-गणनां कृतवान् । सूक्ष्मपञ्जिकाक्रान्त्यादिवर्णने स लिखितवान्—"कर्मर्हिं-पञ्चाङ्गसमत्वसिद्धौ निशापतेरेव महोपयोगात्दृक्सिद्धयेऽस्य त्रिविधं हि वीजं

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



तुङ्गान्तराद्याख्यमकल्पि सूक्ष्मम् । तिथावुड़ौ द्वित्रिपलप्रभेदो—वेद्य:परं विश्व-सृजानचार्य्यैः श्रेयान् सतत् शक १४ घटी प्रभेदात् समुद्धरेत् सारमसारतोहि ।"

तुङ्गान्तराद्याख्यम् तुङ्गान्तर पाक्षिक दिगंश नामधेयम् । चन्द्रशेखर-स्तस्यग्रन्थे सूर्यसिद्धान्त, सिद्धान्त शिरोमणि, सिद्धान्त शेखर ग्रन्थेभ्यो बहूदाहरणानि प्रददौ । स ग्रहगति, ग्रहण, समयक्रमादि ज्ञाने यन्त्रप्राधान्य-मङ्गीकृतवान् । यतो यन्त्रं विना तद् विषयक ज्ञानं सुगमं न भवेत् ।

गोल कालभेदेन यन्त्रस्य द्वैविध्येऽपि तयोरवान्तरभेदा वहवो वर्त्तन्ते । प्राचीन गणकैर्गोलयन्त्रमेक कक्षमिति प्रोक्तम् । किन्तु सामन्तेन तस्य वहु कक्षतोद्भाविता ।

स सिद्धान्तशेखरकृत: श्रीपते: यन्त्र निर्माण पद्धतिमनुसृतवान् । गोलाधिकारे गोलादि यन्त्र वर्णने सलिखितवान्—

"यन्त्रं विना ग्रहगति ग्रहणादिकानां
स्याद् वासना नसुगमा समय क्रमश्च
तद् यन्त्र निर्मिति मुपक्रमतेऽभिधातुं
सिद्धान्त शेखरकृते: प्रतिभानुसारात् ।"

स सिद्धान्त शिरोमणिकारं भास्कराचार्य्यं गुरुममन्यत । गोलाधिकारे स उक्तवान्—

"आस्माकीन महोपकार कृतिनं वन्देगुरुं भास्करम् ।"
"सिद्धान्त जातोद्धृत वाक्यचक्र सन्दर्भितात्म ग्रथिताग्र्यपद्यैः ।
गोलं ब्रुवे बालविबोधनाय वाचं पुरस्कृत्य च भास्करीयाम् ।"

"अतिसूक्ष्ममते यदितेऽस्तिमते
स्थिरतातरणेश्चलताधरणे:
निजवाङ्मय खण्डित पण्डित तत्
शृणु मद्गिर मावृणु चात्मवच:"

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



"ब्रह्माण्डाखण्डभाण्डस्थिरतरधरणी मण्डलभ्रान्ति शौण्ड-
प्रोद्दण्डैलण्डदन्तावल बलूदलनाकुण्ठ कण्ठीरवश्री:
सोऽयं नीलाद्रिसिंहान्वय वदनदरी निर्गत: प्राप्तदुर्गः
स्फीत स्वख्यातिरस्तु प्रथमविगणितस्कन्धसार: प्रबन्धः ।"

इत्यादिलेखस्तस्य गर्वोक्तिरिति केचित् समालोचयन्ति । मन्मतेतु तस्य स न दर्पोक्ति: । विद्यावतामग्रगण्यस्य विनयादिसद्गुणमण्डितस्य आत्मश्लाघाविवर्जितस्य तस्य हृदये गर्व: स्थानं नलेभे । गभीरसूक्ष्म गवेषणया स्वप्रज्ञोद्भावित यन्त्र साहाय्येन यथार्थं फलभाज: वेदादि विविध शास्त्र प्रमाण नाना सद्युक्तिप्रत्यक्षानुमानाविभि: स्थिरीकृतस्थिरास्थैर्यं वादस्य वहुयुक्तिभिर्विपक्षमुखमुद्रणं कृतवतस्तस्य प्रोक्त: सिद्धान्त दर्पणस्थोल्लेख: स्वसाधनासिद्धिसन्तोषात्मविश्वासदृढतापरिचायिका प्रगल्भोक्ति: ।

"हे धीरागणका: × × × × × सदोषा न के"
"दृष्ट्वा दृष्टि विरोध मन्य गणितं × × कस्मैचिदस्मैनम: ।"
"भीमस्यापि पराजयो युधिभवेत् × × × कृत्वानु कम्पांमयि" ।
"आत्मोत्कर्ष: पूरुषै: सर्वथेष्टोदेवाकारे केर्मचिद् घट्यमाने
तस्य स्याच्चेन्मर्कटाकारसिद्धिर्दैवाधीनो नास्ति दोष स्तदेष: ।"

इत्यादि लेखावली तस्यगर्वाभावं वोधयति ।
सामन्त महोदय: प्रधान जगन्नाथभक्त आसीत् ।
स जगन्नाथं श्रीकृष्णतादात्म्येन ध्यायतिस्म ।

तद् यथा—"नीलारविन्द सुमिलिन्द कलिन्दजेन्द्र-
नीलाम्बुदालि दलिताञ्जन पुञ्जमञ्जुम् ।
नीलाचलाधर शिरो मुकुटायमानं
नीलाम्बरानुज गजं शरणं व्रजाम: ।"

× × ×

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



''नीलस्याचलनायकस्य शिरसोऽलङ्कारभावात्स्वतः
स प्रोक्तः किल काल काले इति यः कृष्णायतस्मै नमः।''

इत्यादि। सामन्तः नैषधीय चरितकार श्रीहर्षस्य सूरिसर्वसूकारगोविन्द कवि भूषण सामन्तरायस्य च रचना शैलीमनुसृतवान्। स च वहूनि उत्कल भाषीय काव्यानि पठितवान्। तेषु तस्मै भञ्ज साहित्यानि सम्यक् रोचन्तेस्म। सूर्यसाम्येन जगन्नाथ स्तुतिं कृतवतः उपेन्द्र भञ्जस्य वैदेहीश विलास काव्य प्रथम पद्यादिपदस्थ भावावल्या सह सामन्तस्य ''छायाकान्तः × × पातु पङ्काद्धरिर्नः'' अस्य तथा श्लिष्ट श्लोकस्यार्थः प्रायेण मिलितो भवति। यथा—वैं. वि—

| | |
|---|---|
| ''वन्दइ दीन वान्धव हरि[१] | ये तम चक्र खण्डनकारी[२] |
| सदा कमलानन्द विस्तारी[३] | स्वभावे ईन ये |
| विभु अनन्त अङ्कविहारी[४] | कर प्रताप यार सञ्चरि |
| निशाचरङ्क उल्लास हरि[५] | पूजे सुमन ये। |
| वइनतेय याहा अग्रते स्थित ये''[६] | |

× × × सि.द. जगन्नाथस्तुतिः—

''छायाकान्तः कृतान्तार्चितचरणयुगः प्राणिराजत्सरोजः
स्वाग्रोद्यद् वैनतेयो[६] रजनिचरसुखोच्छ्राय विच्छेददक्षः[५]
स्वच्छानन्ताङ्कलीलः[४] क्षपिततमतमाः सर्वतेजोऽभिभावः[२]
कालिन्दयानन्द कन्दः प्रमुदित कमलः[३] पातु पङ्काद्धरिर्नः[१]।''

संख्यारेखाङ्कितपदेषु उभयोरर्थसाम्यम्। सिद्धान्तदर्पणे नवाविष्कृत विषया वहुशो दृश्यन्ते। इदानीं सिद्धान्तदर्पणोक्त सूक्ष्मगणनानुसारेण पञ्जिकां कुर्वन्ति। प्राचीनप्रकाण्डपण्डितमण्डलीप्रदर्शित ज्योतिःशास्त्रमार्गं

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



परिष्करणपटिष्ठस्य गभीरगवेषकस्य नवाविष्करणचातुरीचणस्य चन्द्रशेखरस्येदं विषेषत्वं, यत् कस्माच्चिद् विशिष्ट ज्योतिर्वित् पण्डितात् ज्योतिःशास्त्रमनधीत्य उत्कलात् बहिः किंचित् स्थानमगत्वा केवलं तत्पितुः ग्रहराशिनक्षत्रादिपरिचयपूर्वकं सामान्यज्योतिःशिक्षांप्राप्य स्ववुध्या ज्योतिःशास्त्रमधीत्य तद्‌गत विषयावलि परीक्ष्य गवेषणया सिद्धान्तदर्पणग्रन्थमाविष्कृत्य विश्वप्रसिद्धोऽभूत् । गणितशास्त्रे तस्य महती प्रतिभासीत् ।

दर्पणे ये साहित्यांशाः परिदृश्यंते, तेषु तस्य रचना नैपुण्यं च समुन्नत कोटिकं परिलक्ष्यते, तत्र नानालङ्कारसमलंकृता दशावतारस्तुतिमहिता जगन्नाथस्तुतिसहृदयानां विदुषां हृदये परमानदं ददाति ।

तस्य प्रतिभा, साधना, गवेषणा, शास्त्रज्ञानार्जने आग्रहः, जगन्नाथभजनानुरागः, सौजन्यं, नैष्ठिकता, सहनशीलता, स्मरणशक्तिः, साहसिकता, इत्यादि सर्वं तज्जीवनकाल कार्यंकलापतो विचार्य को हृदयवान् जनस्तस्य वैशिष्टयं न स्वीकुर्यात् । अतस्तत् प्रशस्तिकरणे आग्रहान्वितो भूत्वाएतत् पूस्तकं व्यरचयम् । किन्तु एतत् प्रशस्तिकरणं महामनीषिणस्तस्य न पर्याप्तम् । ग्रंथगौरवभयादेव मयैतत् संक्षिप्तीकृतम् ।

स्रग्धरा शार्दूल विक्रीडित वृत्ताभ्यां सर्वे श्लोकामया रचिताः । तेषु यथायथं श्लेषोपमारूपकानुप्रासाद्यलङ्कारा: सन्निवेशिता: । भवतोऽनुरुणध्मि, यद्यारम्भादासमाप्ति अत्र दृष्टि पातयिष्यति भवंतस्तदात्मानं कृतार्थंमंस्ये । इत्यलंवहुना ।

**विनीतः श्री वनमाली आचार्य शर्मा**

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# मङ्गलाचरणम्

। ॐ श्री गणेशाय नमः ।

जातं श्रीमथुरापुरि व्रजपुरे नन्दालये वर्द्धितं
श्रीवृन्दावन वेणुवादनरतं लीलाजगन्मोहनम् ॥
विद्याप्राप्तमवन्तिकापुरि महाश्चर्यं क्रियाकारकं
द्वारावत्थधिपं विचित्रतनुभृन्नीलाचलेशं भजे ॥ १ ॥

## ग्रन्थकृत्प्रतिज्ञा

यः श्रीभारतगौरवं गणितवित् श्रीभास्कराचार्यवत्
सिद्धान्तादिकदर्पणस्य रचनात् ख्यातं क्षितौ यद्यशः ॥
आचार्यो वनमाल्यहं हि चतुराचार्यः प्रशस्तिं मुदा
कुर्वे श्रीयुनचन्द्रशेखरमहाभागस्य विज्ञानिनः । २ ।

## संक्षेपेण प्राचीनोत्कल-गौरवपरिचय-प्रदानम्

गङ्गाकावेरिकान्तामधुपुरवसुधा मण्डलाखण्डलेन
वीरश्रीलोत्कलेशा मगधविजयिना खारवेलेनभुक्ता ।
व्याप्तामीद् योत्कलक्ष्मा हृतसकलवृहद्गौरवायामिदानीं
दुर्दैवायां तदुर्व्यां शितिगिरिपतिमन्मण्डलं भातिपुर्याः । ३ ।

टि—कावेरी एव कावेरिका स्वार्थे कः 'ई' कारस्य वैकल्पिको ह्रस्वः । गङ्गा च कावेरिका च तयोः अन्तः मध्यभूभागः यस्मिन् तत् आमधुपुरं मथुरापर्यन्तं यत् वसुधामण्डलं तस्य आखण्डलः इन्द्रः तेन । वीरः श्रीलः उत्कलेट् तेन । शितिगिरिः नीलाचलः तस्य पतिः श्रीजगन्नाथः अस्ति यस्य तत् ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



# उत्कलस्य पुरीमण्डलान्तर्गत खण्डपत्तनवर्णनम्

तत्र स्वर्गधुनीसमान सरितश्चित्रोत्पलायास्तटे
ब्रह्माद्रौ खलु नीलमाधवमहाविष्णु: सदा राजते ।।
ख्यातं सुन्दरमन्दिरान्तरसदस्तस्यप्रभो: सत्तया
क्षुद्रं खण्डपड़ेति राज्यमभवद् विद्यापुरं प्राक्तनम् । ४ ।

टि—तत्र-पुरीमण्डले । प्राक्तनं-देशीयराज्यमिश्रणात् पूर्वम् ।

यत्राकर्ण्य विपश्चिदालिवदनाद्वेदादिविद्यालवं
सद्मस्था: श्रुतपाठ पाठपटव: पेठु: शुका: शारिका: ।
श्रुत्वा तद् बुधवेश्मकुड्यलिखितान् शास्त्रीयसूक्ष्मांशकान्
दृष्टवासन् समुद: सविस्ममया विज्ञा विदेशागता: । ५ ।

टि—शुकशारिका: मन्त्रश्लोकादिकं कीदृक् पठन्तीति आनन्दिता: । अत्र प्रकाण्डा: पण्डिता:सन्तीति विस्मिता: । तै:सह शास्त्रविचारे पराजयस्य सम्भावनेति भीता: ।

मिश्र: श्रीदीनबन्धुर्गुणिगणतिलक: खड्गरायो यदीय:
शास्त्रस्योड्रानुवादं रुचिरमरचयत् श्रीशुकोक्तस्य तस्य ।।
यस्मादारभ्य तस्यान्वयभवपुरुषा: सन्तचासन् सुविज्ञा-
इत्थं तत्स्थान विद्या गुणमणमहिमा साधु बुद्ध्यानुमेय: । ६ ।

टि—यदीय:—यत् खण्डपत्तनीय: । तस्य—प्रसिद्धस्य । तच्छत्र् दस्य प्रसिद्ध् यर्थता । श्रीशुकोक्तस्य शास्त्रस्य—भागवतग्रन्थस्य ।

"निगम कल्पतरो र्गलितं फलं
शुकमुखादमृतद्रवसंयुतम् ।।
पिवत भागवतं रसमालयं
मुहुरहो रसिका भुवि भावुका: ।"

इत्यादिना शुकोक्ततया सर्वजनविदितस्य इति भाव: । अत्रेदमवधेयं यत् वर्णित श्रीदीनवन्धु मिश्रक्षड्गरायस्य वंशधर: श्रीमान् आनन्द खेडेङ्गा अत्र प्रशंसनीय चन्द्रशेखरस्य सस्कृताध्यापक आसीत ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


## खण्डपत्तन राजबंशवर्णनम्

आसीत्तत्र बघेलवंशपुरुषव्याघ्रो महाविक्रमी
विख्यातो रघुनाथपूर्वके नरेन्द्रस्यात्मजो मध्यमः।
दीर्घायुर्यदुनाथनामक नरेशो मञ्जराजोऽनघः
सोऽभूदादिमखण्डपत्तनपति राज्यप्रतिष्ठापकः। ७।

तत्सूनुर्हरिपाद पङ्कजरतो नारायणाख्यः सुधी-
राजाऽभून्मधुरं च यो रचितवान् संगीतनारायणम्।
आसीत्तत्सुतवालुकेश्वरनृपः ख्यातः प्रजारञ्जनो
दुर्गप्राग्दिशि वालुकेश्वरशिवागारं च सोऽकारयत्। ८।

तज्जोऽभूद्भूमिभर्त्ता प्रभु गुणगणवान् मालिशेषोवनादि-
र्यस्य प्रज्ञा प्रतापाभ्युदयवहुयशो मिश्रकार्यीतितुष्टः।
तत् कालीनोत्कलेशो गजपतिनृपराड् बीर भूरिप्रतापोऽ-
दात्तस्मै मर्द्दराजभ्रमरवरबरोपाधिमन्ते सरायम्। ९।

टि—बनादिः मालिशेषः—बनमाली। अन्ते सरायं मर्द्दराजभ्रमर वरबरोपाधि—मर्द्दराज भ्रमरबर राय इति श्रेष्ठोपाधिम्।

पुत्राभावात्तदीयान्नृपतिगुणयुतस्तत् पितृव्यस्य सूनु-
र्वैरागी भूमिपालोऽभवदतिचतुरो देवविप्रातिभक्तः।
तस्य प्रख्यातकीर्त्तेस्ततनयतनयः साधुवुद्ध्या समेतो-
राजाभूद्दीप्ततेजाः खलवलदमनः श्रीलनीलाद्रिसिंहः। १०।

टि—ततः—बिस्तृतः नयः—नीतिः अस्य तथाभूतः तनयः।

सूनुस्तस्य नृसिंहसिंहनृपतिः सद्राजधर्मान्वितो-
दुर्गे स्थापयति स्म यः सुमहिमश्रीनीलकण्ठेश्वरम्।
तज्जः श्रीपुरुषोत्तमः शुभमति र्ज्येष्ठोऽभवद् भूपति-
स्तत् पुत्रः खलु कृष्णचन्द्रनृपतिः सोऽभूत् प्रजावत्सलः। ११।

टि—दुर्ग—खण्डपत्तन दुर्गे।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



तज्ज: कृष्णबिहारिनामकधराधीशो महान् धार्मिक:
गोपीनाथमहाप्रभोरपि जगन्नाथस्य सन्मन्दिरम् ॥
सौवर्णं निरमापयच्च रुचिरं श्रीराधिकाविग्रहम्
उर्वीं पुष्करिणीमखानयदसो राज्यश्रिया वर्द्धक: । १२ ।

टि—गोपीनाथमहाप्रभो:, जगन्नाथस्य—(स्थानीयस्य)

पुत्राभाववशादभून्नटवरस्तस्यानुज. पार्थिवो-
ऽजागन्नाथमकारयत् मदुपलैरम्यं जगन्मोहनम् ॥
नानोद्यान सरांसि नन्दनवनं श्लाध्यांश्च कूपान् वहुन्
देवब्राह्मणभक्तिमान् प्रभूगुणैर्युक्त: स धन्य: क्षितौ । १३ ।

टि—नन्दनवनं—तदाख्यविशालचूतोद्यानम् ।

तस्यापुत्रतया तदभ्युपरतौ तद् वंशसंपकित:
श्रीनारायणसिंहवम्नतनय: श्रीरामचन्द्रोऽभवत् ।
विद्वन्मण्डितखण्डपत्तनधराखण्डस्य चाखण्डल:
सोऽभूत् पाठविवर्जितोऽपी चतुरो दीने दयादक्षिण: । १४ ।

टि—तदभ्युपरतौ—तन्मुतौ सत्याम् ।

निं:सन्तानतया कुदुम्वकमनोमालिन्यजालादिना ।
वालं वर्णितरामचन्द्रधरणीषाल: कपालान्वतम् ।
श्रीमन्तं सुगुणाकरं हरिहरं सल्लक्षणेनान्वितं
प्रेष्ठं सद्विधि पोष्यपुत्रमकरोच्छ्यालादिकन्दात्मजम् । १५ ।

टि—कपालान्वितम्—उत्तमभाग्यसूचकभालयुक्तम् ।
सल्लक्षणेन अन्वितं—राजलक्षणलक्षितमित्यर्थ: ।
श्याल:—पट्टमहिषी - भ्राता य: आदीकन्द:
तस्य आत्मज: —पुत्र:तम्

राज्यश्रीभाग्यभोगी हरीहरनृपती रामचन्द्रावसाने
प्राक् शैल्या मर्द्दराजभ्रमरवरसमाश्लिष्टराय:पदव्या
शीक्षादीक्षासमीक्षावनकुशलतया राजमर्यादया च
युक्त: कंग्रेसभूक्तश्चतुरमतिरभूदुत्कले पूर्त्तमन्त्री । १६ ।

...

टी—मर्द्दराजभ्रमरवरसमाशिलष्ठराय:-
मर्द्दराज भ्रमरवरराय: ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



शिक्षा च दीक्षा च समीक्षा च प्रवतं च तत्कुशलः तत्ता तया ।
राजोदार महामना हरिहरः श्रीरामचन्द्राख्यया
सर्वादौ कृतवान् स्वकीयनगरेऽसावुच्च विद्यालयम् ।
नाम्ना श्रीयुत चन्द्रशेखर महाप्राज्ञस्य मुद्रालयम्
मन्त्रित्वावसरेऽकरोच्च कुसुमीवन्धादि मार्गोन्नतिम् । १७ ।

टि —श्रीरामचन्द्राख्यया—निजपितृरामचन्द्रनाम्ना । कुसुमी—तन्नाम्नी नदी ।

आसीत् सोऽपि विमानचालनपटुः कर्त्तव्यनिष्ठः सदा
दुर्नीतिप्रतिरोधकश्च समयज्ञानात्मसम्मानवान् ।
अश्वारोहणशिल्पकर्म्ममृगयासत्कन्दुकक्रीड़ने
दक्षस्तस्य नितान्तभक्तिरभवत् श्रीनीलकण्ठेश्वरे । १८ ।

टि— अश्वारोहण × × × क्रीड़ने इत्यत्र समाहारद्वन्द्वैकवचनम् ।

## खण्डपत्तनराजपरंपरावर्णनानन्तरं सिंहावलोकनन्यायेन चन्द्रशेखरस्य जन्मरहस्यवर्णनम्

पूर्वोक्तस्य नृसिंहसिंहनृपतेःपुत्रःप्रियः पञ्चमः
प्रोक्तश्रीपुरुषोत्तमक्षितिपतेर्भ्राता चतुर्थश्च यः ।
सामन्तःसुगुणान्वितः सहृदयः श्रीश्यामवन्धुर्महा-
नासीद्धर्मपरायणः स्थिरमना विद्यावतामग्रणीः । १९ ।

तत्पत्नी विष्णुमाली कृतसुकृतधराकोटराट्सूनुपुत्री
निष्ठाशिला वदान्या हरिभजनरता स्वामिसेवापरासीत् ।
शिक्षादीक्षादिदक्षा नृपतिकुलसदाचाररक्षादिदृक्षा
साध्वी माध्वीकवाणीविभवमधुरिमा पार्वतीकान्तभक्ता । २० ।

टि— कृतं सुकृतं यया सा कृतसुकृता । धराकोटराजःसूनुः—भ्राता—पद्मनाभ—सींहवर्म्मा तस्य पुत्री—तनया । कृतसुकृताचासौ धराकोटराट्सूनुपुत्री चेति कृतसुकृतधराकोटराट्सूनुपुत्री । अथवा कृतसुकृतः धराकोटराट् तस्य सूनुःभ्राता तस्य पुत्री । अथवा कृतसुकृतः धराकोटराट् सून्नुः तस्य पुत्री ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



या दीना नवनन्दन.नुजनुष: पुत्रस्य मृत्यान्तिक-
ग्रामे खुण्टुपड़ाभिधे परिलसद्रामेश्वरध्यानकृत् ।
तच्छक्ति परितो निमील्य नयने हस्त: विघूर्ण्याकुला
प्राप्य प्रस्तरगोलमेकमगिलत् स्निग्धं लघु श्यामलम् । २१ ।

टि— नव तत्संख्याका: नन्दना:—दुहितर: तदनुजनुष:—तत्परजन्मन:

तं मेने भवभक्तियुक्तहृदया सा तद्दयासम्भवं
सानन्दं निजगाद तं च विषयं नम्रा निजस्वामिनम् ।
भाग्याद् गर्भवती च तत्रभवती भूता चिरात् श्रीमती
काले सूतवती शुभे सुतनयं यस्य प्रशस्ति ब्रुवे । २२ ।

टि— तं – प्रस्तरगोलं । तत्रभवती—माननीया । अचिरात्—अविलम्बेन । भूता—अभूत् । निम्नरेखाङ्कितयमकम् ।

सामन्त: श्यामशन्धु: स्वतनुज जननाकर्णनात्स्वर्ण मुद्रा
वस्त्रालङ्कारभूम्यक्षतवरसुरभीर्दत्तवान् ब्राह्मणेभ्य: ॥
क्वाँ क्वाँ तन्नन्दनस्य श्रवणसुखकर: क्रन्दनं कर्णयित्वा
नन्द प्राप्ताऽमन्दं सहृदयपितरौ वाञ्छितार्थस्य सिद्धया । २३ ।

शैवानुग्रहसत्तनूजजननात् तन्नाम मातापिता
भक्त्या चेतसि चन्द्रशेखरइति ध्यात्वा शिवं चक्रतु: ।
तत्पूर्वप्रभवात्मजस्य निधनाल्लोकप्रथारक्षया
हृष्टावाह्वयतां पठाणि इति च स्नेहेन तं नन्दनम् । २४ ।

वालोऽसौ स वलक्षपक्षरजनीभर्त्तेवसंवर्द्धितो-
नित्यस्वच्छगृहाङ्गणेऽल्पगतिमान दोर्जानुभाराश्रयात् ।
पित्रोरङ्गुलिधारणेन शनकै: कुड्यं च धृत्वागत:
स्वीयेनैव लघूद्यमेन परित: सद्म क्रमेणागमत् । २५ ।

पाठान्तेऽगणयत्स्त्रपुस्तकगतं चित्रं विचित्र:शिशु-
र्भावीगाणितिको महानयमिति प्रज्ञातवांस्तद्गुरु: ।
सिद्धं वाल्यगुरोर्भविष्यति तथाभूतानुमानं हि तत्
यत् कीर्त्तिर्धवलीकरोति नितरामद्यावनीमण्डलम् । २६ ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



सत् पुत्रः कुलचन्द्रमा विनयवाङ्माधुर्यगाम्भीर्यवान्
धैर्यौदार्यदयाक्षमादिसुगुणैरासीत् सदा भूषितः
ज्योतिःशास्त्रमहाविशारदतयालब्धप्रतिष्ठो भृशं
सामन्तः स हि चन्द्रशेखर इह प्रज्ञातवैज्ञानिकः । २७ ।

यून स्तस्य समागतः खलु यथाकालं विवाहोत्सव-
स्तत्रासीद् गजवाजिराजिचरणाघातोत्थितै रेणुभिः,
भेरीशङ्खमृदङ्गकाहलवृहत्तुर्यादिवाद्यस्वनै-
र्दोलावाहकगोपसुप्रवचनैः पूर्णं नभोमण्डलम् । २८ ।

नानास्थानसमागतैः सहगतैः सुक्षत्त्रियैर्बान्धवै-
र्विद्वद्भिर्वरयात्रिभिश्च बहुशः सम्भारसज्जीकृतः ।
मुख्याध्वानुगुलस्य लोकनिवहैः संदर्शकैर्मण्डितः
सर्वोत्कृष्टइतीरितः समनुजैश्चोद्वाहयात्रोत्सवः । २९ ।

रम्भालीपूर्णकुम्भावलिभिरपि सभामण्डपस्याग्रभागः
शोभासम्भारसज्जीकरणजनमनोहारिभूरिप्रकारः ।
नानावर्णध्वपाश्र्वद्वयविहितवृहत्तोरणैः सद्ध्वजैश्च
कृत्यैर्नृत्यैर्विचित्रैरभवदतिशयद्योतितश्चोपभोग्यः । ३० ।

सामन्तस्य मुखं विलोक्य मनुजाः सौन्दर्यसंवर्जितं
एवंभूतमसुन्दरं वरमिमं तातः किमर्थं व्यधात् ।
इत्यूचुः परिवुध्य तत् सजननी कन्याऽभवद्दुःखिता
तज्ज्ञात्वा दश नैषधीयचरितश्लोकांस्तदा सोऽपठत् । ३१ ।

टि—सः-चन्द्रशेखरः ।

तच्छ्रुत्वा कन्यका सा प्रचुरगुणयशः सुन्दरस्योत्तमस्या-
वादीदेनं मुखश्रीरहितमपि विवक्ष्यामि नूनं वरेण्यम् ।
शान्तस्वान्तः स तस्या गुणिजनसुगुणग्राहिकाया गृहीत्वा
पाणिं वाणीसुपुत्रः सदयितसजनः स्वीयसद्माजगाम । ३२ ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



पित्रो:शंशिरयामिनीव सदने संवर्द्धिता नन्दिनी
दीप्ता शश्वदभामिनी मुनिसुतेवादर्शसन्नन्दिनी ॥
विद्यागौरवकामिनी मतिमती सा पूर्वदिग्दन्तिनी
चेतोवल्लभगामिनी गुणवती सामन्तसीमन्तिनी । ३३ ।

टि—आनन्दिनी—आनन्दयुक्ता । दीप्ता— दीप्तिमती । अभामिनी— दीप्ति रहिता इति विरोध: । अभामिनी—क्रोधवर्जिता इति विरोधपरिहार: । पूर्व दिग्दन्तिनी—अभ्रमु: तस्या: चेतोवल्लभ:पतिरित्यर्थः ऐरावत: सइवगच्छतीति । "कर्त्त र्युपमाने" इति णिनि: । सामन्तसीमन्तिनी—चन्द्रशेखरपत्नी ।

## प्रश्नोत्तरेण विषमसमस्यया सह याथार्थ्येन चन्द्रशेखरस्य सीतापतित्ववर्णनम्

वार्णं: कस्य गत: क्षयं दशमुख: क्षीरोदधे: का रमा
राजर्षेर्जनकस्य काचदुहिता भैम्याश्च को नैषध: ॥
याथार्थ्येन समस्यिका च विषमा का चन्द्रम:शेखर:
श्रीमद्दाशरथे गुंणाढ्यतनया सीतामनोवल्लभः । ३४ ।

टि—भैम्या:—दमयन्त्या: । नैषध:—नल: । याथार्थ्येन-अत्र सहार्थे तृतीया । चन्द्रम:शेखर:—चन्द्रशेखर: । प्रथमप्रश्नस्य उत्तरं—श्रीमद्दाशरथे: । द्वितीय प्रश्नस्य उत्तरं—गुणाढ्यतनया । तृतीयप्रश्नस्य उत्तरं—सीता । चतुर्थप्रश्नस्य उत्तरं—मनोवल्लभः । याथार्थ्येन यथा—चन्द्रम:शेखर:—चन्द्रशेखरसिंहसामन्त: । श्रीमद्दाशरथे:—अनुगुलराजवंशीयतुरङ्गग्राम निवासिन: दाशरथिक्षत्रियवरसिंहस्य गुणाढ्यतनया या सीता तस्यां मनोवल्लभ: पतिरित्यर्थ: । विषमसमस्या यथा—चन्द्रम:शेखर:—महादेव: । श्रीमद्दाशरथे:—श्रीरामस्य । गुणाढ्यतनयाया: सीताया: । मनोवल्लभ: हृदयवान्धवे: ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

पुत्रा यस्य विचक्षणा: सुकृतधीमन्त: सदाज्ञावहा:
कान्तासीत् सुपतिव्रता गुणवती सीताभिधाना सती।
मित्राणि प्रियकार्यकारकतयाऽकुर्वन् यमानन्दितं
तादृक्पुत्रकलत्रमित्रसहितो यो भाग्यवान् भूतले । ३५ ।

टि—पुत्रा·—पीताम्बर गदाधर चक्रधरा:। सदा—सर्वदा आज्ञावहा: । अथवा सन्तश्च ते आज्ञावहाश्चेति ।

आसीदित्यत्र वचन विपरिणामेनान्वय: । मित्राणि-
महेशचन्द्रन्यायरत्न, योगेशचन्द्ररायविद्यानिधि,
कविवर राधानाथराय, सुदाम चन्द्र नायक, स्थानीय
लक्ष्मीधरवक्सिपट्नायक, नारायणसदस्यादीनि ।

य: श्लेषात्मकवाक्यभाषणपटु भंञ्जीयकाव्यादिस-
च्चर्च्चा प्राचित भूरिभावविलसत् साहित्यविद्यावधू: ।
गोविप्रामरभक्तियुक्तहृदयोऽभूत्प्रेष्ठगीर्नै ष्ठिक:।
प्राणप्राणदयोदयो वृहदयोगोल: स्वकीये मते । ३६ ।

टि—भञ्जीयकाव्यादीनां सच्चर्च्चया प्राच्चिता भूरिभावविलसत्साहित्य विद्या—वधू: येन स: । प्राणिनां प्राणेषु दयाया उदय: यस्य स: । वृहदयोगोल:—विशाललौहगोलवत् सुदृढ़ इत्यर्थ: ।

श्रीहर्षादिकवीशसाधुरसवत्सुश्राव्यकाव्यावलिं
हर्षोत्कर्षयुत: पठन् विहितवान् विद्वद्धृदाकर्षणम् ।
मन्वादिस्मृतिशास्त्रसारसुपरामर्शं महर्षिप्रभोऽ-
कार्षीत् प्रत्यह दन्तघर्षणमुखाय:कृत्य नित्यक्रिया: । ३७ ।

टि—महर्षे:प्रभा इव प्रभा यस्यस महर्षिप्रभ: । दन्तधावननियमा:—

"सर्वे कण्टकिन:पुण्या: क्षीरिणश्च यशस्विन:
कटुतिक्तकषायाद्या बलारोग्यसुखप्रदा:
अष्टाङ्गुलेन मानेन तत्प्रमाणमिहोच्यते
प्रादेशमात्रमथवा तेन दण्डान् विशोधयेत्" इत्यादि ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



यो गोविन्द मुकुन्दमाधव हरे हे कृष्णदामोदर
कंसारे मधुसूदनाच्युत विधो हे रुक्मिणीनायक ।
आर्त्तत्राण दयानिधे यदुपते हे वासुदेव प्रभो
गोपीनाथ जनार्दनैवमवदन्नामानि विष्णोःसदा । ३८ ।

पुण्यात्मा शिवरात्रिजागृतिपरःश्रीनीलकण्ठेश्वर-
श्रीमन् मण्डपमण्डनोऽक्रृतहविर्दीपावलीदीपनम् ।
श्लोकान्तं च बुधैर्महेशमनुवीन्नीराजनावेक्षणे
यः प्रासादप्रदक्षिणेऽपिच महादीपेक्षणस्य क्षणे । ३९ ।

टि—अकृत—कृतवान् । अनुवीत्—अस्तावीत् । णूस्तवने । तुदादिगणीयः ।

यः सम्यक् स्सृतनीलशैलसदनः स्कन्धप्रकाशान्वितं
सिद्धान्तादिकदर्पणं रचितवान् ग्रन्थं प्रकाण्डं नवम् ।
भूस्थैर्यप्रतिपादनीयविविधग्रन्थप्रमाणात्मकैः
श्लोकैरुत्तमयुक्तिभिः सुरुचिरैर्युक्तं बुधानन्ददम् । ४० ।

टि—स्कन्धाः-गणितादयस्त्रयः प्रकाशाः—चतुर्विंशतिःतैःअन्वितम् ।

तद्ग्रन्थे श्रुतिनागपक्षनयन श्लोकामक्षावुद्धिना
तेनारच्यधिकारपञ्चकयुते सत्सूक्ष्मसिद्धान्तिना ।
अन्येचाङ्गसुधांशुलोचनमिता ग्रन्थान्तरोदाहृता-
स्तेषां मिश्रणतो नभःखशरदृक्श्लोकाःसमावेशिताः । ४१ ।

टि—श्रुतयः—वेदाः ४ नागाः ८ पक्षौ २ नयने २ तत्परिमिताः श्लोकाः २२८४ अङ्कानां वामतोगतिः । अन्ये—अपरे अङ्गानि ६ सुधांशुः—चन्द्रः १ लोचने २ तन्मिताः तत्संख्यका इत्यर्थः । २१६ नभः ० खं ० शराः ५ दृशौ २ २५०० । समावेशिताः—एकाधारस्थापिताः । अधिकारपञ्चकेन 'मध्यमाधिकार, स्फुटाधिकार, त्रिप्रश्नाधिकार, गोलाधिकार, कालाधिकार स्वरूपेण युतः तस्मिन् ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



बाल्यैऽधीत्य चतुर्दशे हि वयसि ग्रामाञ्चले पण्डितः
शास्त्राविष्करणेन यो भुवि चतुस्त्रिंशे महापण्डितः ।
सूक्ष्मज्योतिषसारतत्वकमलव्रातेषु मार्त्तण्डितः
सर्वज्ञाततया क्रमेण ततया कीर्त्याभवन् मण्डितः ।४२ ।

टि—शास्त्राविष्करणेन—सिद्धान्तदर्पणग्रन्थरचनया । सर्वैःज्ञातः तद्भावः-तत्ता तया । ततया—विस्तृतया ।

जिज्ञासो र्गणकस्य गोलगणनापौरूर्य संलब्धये
छात्राध्यापक सारगर्भकबहुप्रश्नोत्तरव्याजतः ।
श्रीमद्भास्करभारतीमनुसरन् सन्दर्शयन्तीं दिशं
यो गोत्रा गगनोडुगोलगणितं सम्यग्विविच्योक्तवान् । ४३ ।

टि—दिशं संदर्शयन्तीं—दिग्दर्शनं कारयन्तीम् ।

स्व प्राग्वंशीयविज्ञावितविततवृहद्ब्रह्मसिद्धान्तकादि-
चर्च्चां चार्च्चां कवीनां गणितगणसुदिग्दर्शकानामकार्षीत् ।
भावान् मार्त्तण्डरात्रीपतिभगणमुखान् सूर्यसिद्धान्तरीत्या
तद्ग्रन्थानुक्तमन्यं विषयचयमपि प्रोक्तवान् दर्पणे यः । ४४ ।

टि—ब्रह्मसिद्धान्तएव ब्रह्मसिद्धान्तकः । स्वार्थे कः सः आदिः येषां तानि ब्रह्मसिद्धान्तकादीनि स्व प्राग्वंशीयैः पूर्ववंशीयैः विज्ञैः अवितानि रक्षितानि विततानि विस्तृतानि वृहन्ति विशालानि यानि ब्रह्मसिद्धान्तकादीनि शास्त्राणि तेषां चर्च्चा—अभ्यासः ताम् । कवीनाम्-ग्रन्थकर्त्तृणां गाणितिकानां विदुषाम् अर्च्चा—पूजा च तेषां महोपकारसाधकत्वात् दिग्दर्शकत्वेन गुरुत्वाच्च । मार्त्तण्डः—सूर्यः रात्रिपतिः—चन्द्रः तयोः भगणमुखान्—भगणादीन् भावान्—विषयान् । तद्ग्रन्थानुक्तं—उक्तग्रन्थानुदितम् उदयान्तर—साधनादिम् अन्यम्—अपरं विषयाणांचयः — समूहः तम् । दर्पणे—सिद्धान्तदर्पणे ।

ग्रन्थादौ सकलप्रकाशविरतौ श्रीनीलशैलेशितुः
क्षारोदोत्तरतीरशोभनजगन्नाथप्रभोर्वन्दनम् ।
नानालंकरणैर्मनोज्ञयमकानुप्रासकाद्यैर्युतं
योऽकार्षीदतिसुन्दरं सहृदयानन्दातिशय्यप्रदम् । ४५ ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

विद्वद्वृन्दहृदम्बुजावलिमहानन्दस्य सन्दायक:
शश्वद् विष्णुपदावलोकनतनुर्नानाविचारक्रिय: ।
ख्यातो विश्वमहोप्कारकतया भूरिप्रकाशान्वित:
ग्रन्थ: श्रीयुतचन्द्रशेखरकवे: संराजते सूर्यवत् । ४६ ।

टि—विद्वद्वृन्दस्य—विज्ञसमूहस्य हृन्दि—हृदयानि एव अम्बुजानि—पद्मानि तेषाम् आवलि:—समूह: तस्या महानन्द: तस्य । सूर्यस्य पद्मवृन्दमहानन्दसन्दायकत्वं प्रसिद्धम् । ग्रन्थपक्षे विष्णो: पदानां तदर्थवाचिनां विभक्त्यन्तत्व—लक्षणानां अवलोकनंयस्यां तादृशीतनुर्यस्य । सूर्यपक्षे विष्णुपदे—आकाशे अवलोकनं यस्या स्तादृशीतनुर्यस्य स: । ग्रन्थपक्षे नाना—बहुप्रकारा विचारक्रिया—तत्त्वनिर्णय कार्यं यस्मिन्स: । सूर्यपक्षे नाना दक्षिणायनो—त्तरायण मध्यरेखा-गमनादिभेदेन वहुविधा वौ-आकाशे चारक्रिया—गतिकर्म्म यस्य स: । ग्रन्थ: विशेषां-सर्वेषां जनानां महोपकारकतया ख्यात: । सूक्ष्मगणना संसूचित भ्रमशून्यवेलादिज्ञापकत्वेन सर्वजनमहोपकारित्वं तस्य । सूर्य:विश्वस्य सौरजगत: महोपकारकतया ख्यात: । ग्रन्थ: भूरि-प्रकाशै:—प्रकाशनामकै: चतुर्विंशत्या विभागैरितियावत् अन्वित:—युक्त: । सूर्य: भूरिप्रकाशै:—प्रचुरदीप्तिभि: अन्वित: ।

विघ्नेशानसरस्वतीदिनकरादित्यादिसर्वग्रह-
पारावारशशाङ्कशेखरशिवा ब्रह्माण्डसाम्यात्मकम् ।
श्रीनीलाचलनायकीयकवनं श्रीक्षेत्रसंवर्णनं
ग्रन्थे तत्र दशावतारनवनं सर्वं भवत्युत्तमम् । ४७ ।

भूगोलोपरिखण्डपत्तनपुरे संतिष्ठमानो दृशा
प्रत्यब्दं ग्रहराशिभावलि परिक्रान्ति विधाया दरात् ।
तत्सम्बन्धिविशुद्धसूक्ष्मगणनाव्यापारपारं गत-
स्तत्सिद्धान्तफलानि विश्वविदुष: सम्यक् स चादर्शयत् । ४८ ।

टि—ततसम्वन्धिनी—ग्रहराशिनक्षत्रसम्बन्धिनी विशुद्धा—अभ्रान्ता सूक्ष्मा या गणना तस्या व्यापार:—क्रियाकलाप: तस्य पारम्—अन्तम् । विश्वनिवासिन: विद्वांस: तान् अथवा विश्वे—सर्वे च ते विद्वांसश्चेति तान् । गतिबुद्धीत्यादिना विश्वेविदुष:इत्यत्र द्वितीया ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ज्योति:शास्त्रप्रगल्भो निजकरविहितैर्दारुवंशादिखण्डै-
र्यो धीमान्मानयन्त्रादिभिरपि गणनापाटवातिप्रतिष्ठः ।
क्ष्माभृद् वृक्षादिमानं ग्रहभगणतनू दूरतादिप्रमाणं
याथातथ्येन कृत्वा खिलधरणितले प्राप भूरिप्रशंसाम् । ४९ ।

टि— गणनायां पाटवं—सामर्थ्यं तेन तस्मिन् वा अतिप्रतिष्ठा—सुख्याति र्यस्य सः ।

गोलं प्रागेक कक्षं गणितकविगणा भास्कराचार्यमुख्या-
ज्योति:शास्त्रप्रसारप्रथमगुरुजनाः प्रोक्तवन्तःसमस्ताः ।
विज्ञानज्ञानदीर्घातिविषमसरणी सावधानाशुगामी
सूरिस्तद् भूरिकक्षं व्यरचयदपि यः कल्पनाचातुरीतः । ५० ।

टि— विज्ञानस्य ज्ञानं—बोधः तस्य दीर्घा अतिविषमा या सरणी—मार्गः तया सावधानं—सतर्कम् आशु— शीघ्रं गतवान् इति ।

दृक्सिद्धां गतिमाकलय्य गणनांकर्त्तुं किमु ज्योतिषां
दिव्यांदृष्टिमवाप्य सोऽजनि कुतः किं प्राप दिव्याञ्जनम् ।
किं ज्यामागत आर्यकार्यकरणेश्रीशेच्छयाप्रेरितो-
नोचेत्तादृश कष्टकर्म्मकुशलो भूमण्डलेऽभूत कथम् । ५१ ।

टि – ज्याम् पृथिवीम् । क्षौणी ज्या काश्यपी क्षितिरित्यमरः ।

दृष्टवा यस्यातिशुद्धामविकलफलदृक्सिद्धसत्सूक्ष्मपञ्जीं
तद्रीत्यां नीलशैलाधिपनिखिलसदाचारनीतिं विचार्य ।
हर्यादिश्चन्दनस्तत् परमिलितमहापात्रइत्याशु यस्मै
वीरश्रीदिव्यसिंहोगजपतिरवनीनायकोऽदादुपाधिम् । ५२ ।

टि— हर्यादिः, चन्दनः, तत्परमिलितमहापात्रः—हरिचन्दनमहापात्रः । इत्यव्ययोगे प्रथमा ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


अभ्रान्तक्षयवृद्धिकालकलनाद् यो दैविके पैतृके
काम्ये कर्म्मणि शान्तिपुष्टिविषये नित्ये च नैमित्तिके ।
प्रज्ञायुर्बलवीर्यकीर्त्तिकुशलस्वर्गापवर्गप्रदे
सर्वेषां परमोपकारमकरोत्तिथ्यादितथ्यावली । ५३ ।

ज्योतिर्भूषणभाषणक्षमतम: श्रीरुद्रनारायणो-
विद्याभूषणको गदाधरबुध: श्रीश्रीधरो वल्लभ: ।
श्रीदामोदरराजवल्लभमुखा मुख्या यदीया बुधा-
ज्योति:शास्त्रसुशिक्षणाय परया शिष्या बभूवुर्मुदा । ५४ ।

टि— श्री रुद्रनारायण: —मेदिनीपुरान्तर्गतनन्दिग्रामनिवासी । श्री गदाधर विद्याभूषण:, श्रीश्रीधरप्रहराज:, श्रीवल्लभविद्याभूषण: इमे मञ्जुषा-निवासिन: । श्री दामोदरवाणीभूषण:—तालचेरनिवासी । श्री राज-वल्लभ मिश्र: खण्डपत्तनदुर्गनिवासी । अन्येऽपितदीयपुत्रगदाधर-सिंहसामन्तादयस्तस्यशिष्या आसन् ।

मञ्जूषाधरणीपतिं करलसद्यन्त्रेण काष्ठात्मना
स्वीयेनैव महेन्द्रपर्वतमितिं प्रोच्यार्च्चितो योऽभवत् ।
संवादेन च तेन दक्षिणहरिद्भागे विभागे महा-
दु:साध्ये जटिले जनै: सुविदितो नक्षत्रविद्यात्मके । ५५ ।

टि— मञ्जूषाधरणीपतिं—जगन्नाथराजमणिदेओ—नामधेयम् । महेन्द्र पर्वतस्योच्चतापरिमाणे कृतप्रश्नम् । महेन्द्रपर्वतस्य मितिम्—उच्चतापरिमाणम् । दक्षिणहरिद्भागे—दक्षिणदिग्भागे ।

आचार्यो रघुनाथनामक सुधीर्मान्द्राजवासी रवे-
र्यत्प्रोक्तं ग्रहणं विलातजनता दृश्यं निषिध्यैकदा ।
सामन्तीयवचोऽनुसारघटनात् यत्कीर्त्तिराशेस्तदा
मान्द्राजेषु परिप्रचारमकरोत्प्रीत्या महत्या युता: । ५६ ।

टि— येन प्रोक्तं —यत्प्रोक्तम् । मान्द्राजेषु अत्र देशवाचकत्वाद् बहुवचनम् ।

इंलण्डामेरिकास्वयं महिमकरयोर्भावि दृश्योपरागं
य: सम्यक्साधयित्वा विषयमिममधिज्ञाप्य तद्देशनृभ्य: ।
निर्दिष्टे तत्र तत्र व्यवहितसमये स्वोक्तिसत्त्वात् प्रशंसां
लेभे दूरेषु देशेष्वपि बहुषु सुविज्ञानविज्ञान्वितेषु । ५७ ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

टि— इंलण्डामेरिकासु अत्र देशवाचकत्वाद्वहुवचनम् । अयं महिमकरयोः सूर्यचन्द्रमसोः । भावी-भविष्यन् दृश्यः—विलोकनीयः उपरागः—ग्रहः तम् । "उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च" इत्यमरः । स्वोक्तिसत्त्वात्—स्ववचनसाधुत्वात् ।

शुक्रग्रस्तं दिनेशग्रहमपि समये दर्शयित्वा जनेभ्य-
स्तान् नूत्नाविष्कृतं विस्मयसलिलनिधौ सन्निमग्नांश्चकार ।
य श्चन्द्रस्येव चान्द्रे रपिचभृगुतनूजस्य शृङ्गोन्नतिं वै
तद्वन्नव्यान् सुभव्यान् बहुविधविषयान् सम्यगाविश्चकार । ५८ ।

टि—दिनेशग्रहं—सूर्योपरागम् । चान्द्रेः—बुधस्या भृगुतनूजस्य—शुक्रस्य । चन्द्रस्यशृङ्गोन्नतिसाधनं पूर्वाचार्याःकृतवन्तः । सामन्तस्तु चेन्द्र शृङ्गोन्नतिं बुधशुक्रयो रपि शृङ्गोन्नतिं साधितवान् ।

ज्योतिर्विज्ञानशिल्पी स हि निजरचितं मानयन्त्रं गृहीत्वा
शैलप्रासादवृक्षग्रहप्रमुखमितिं नाटकीयच्छटाभिः ।
कृत्वा जिज्ञासुभूर्याग्रहसहितधरारङ्गमञ्चस्थितानां
नृणां वैज्ञानिकानां हृदि समजनयत्तोषहर्षप्रकर्षम् । ५९ ।

टि— जिज्ञासवः भूर्याग्रहसहिताः धरारङ्गमञ्चस्थिताः तेषां ।

ज्योतिर्विज्ञसुधाकरः सुगणकः श्रीवापुदेवस्तथा
मिश्रःश्रीभगवान् बुधो भगवतीपादश्च चिन्तामणिः ।
प्रश्नान् यं परिपृच्छ्य तोषजनकं प्राप्योत्तरं विस्मिता-
यस्यानन्दितमानसाविदधिरे भूरिप्रशंसां सदा । ६० ।

टि— सुधाकरः—महामहोपाध्यायश्रीसुधाकरद्विवेदी ।
श्रीवापुदेवः—महामहोपाध्यायश्रीवापुदेवशास्त्री ।
श्रीभगवान् मिश्रः—जेयपुरीयःज्योतिःशास्त्रज्ञः ।
भगवतीपादः—श्रीभगवतीचरण स्मृतितीर्थः ।
चिन्तामणिः—जयपुरदुर्गनिवासी पण्डितचिन्तामणि रथः ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

श्रीमार्कण्डेयशास्त्रीप्रवचनचतुरस्तर्कपञ्चाननो यद्-
वाक्प्रागल्भ्यप्रदृष्ट्याप्रमुदितहृदयोऽभूदनेकेऽपरे च
काव्यालङ्कार शब्दश्रुतिगणितपुराणेतिहासस्मृतिज्ञा-
यो वैवैज्ञानिकानां हृदि समजनयत्तोषहर्षप्रकर्षम् । ६१ ।

टि— प्रमुदितहृदयः अत्र वचनविपरिणामेनान्वयः ।

विश्वख्यातविशालपूःकलिकतासंराजितस्याग्रहा-
दध्यक्षेण विशिष्टसंस्कृतमहाविद्यालयस्यैकदा ।
सार्द्धंयेन महेशचन्द्रसुधिया शास्त्रीयचर्च्चा कृता
प्राधान्यंपरिलक्ष्य तस्य कटके वह्वी प्रशंसा कृता । ६२ ।

टि— महेशचन्द्रसुधिया—पण्डित महेशचन्द्रन्यायरत्नेन ।

कुक् साहेबः प्रतापी कटक कमिशनर सप्तशय्याद्रिमानं
पृष्टवा यंप्राप्य साधूत्तरमतिशयसन्तोषयुक्तान्तरात्मा ।
तस्यार्च्चांपुष्पसारैर्मलयजसहितैः कौसुमैः पुष्पहारैः
कृत्वा धृत्वा करे तं स्मितवदनमगात् पूज्यपूजातितोषम् । ६३ ।

टि—करे इत्यत्र अवच्छेदे सप्तमी । अगात्—अलभत । स्मितं वदन यस्य तम् । अथवा स्मितंवदनं यस्मिन् कर्म्मणि तद्यथा तथा ।

रेभेन्साकटकप्रतिष्ठितमहाविद्यालयाध्यापको-
विज्ञानज्ञगुणज्ञसद्गुणयुतो योगेशचन्द्रश्च यम् ।
पृष्टवा भूभवभार्गवग्रहमिथो दूरत्वमेवैकदा
तुल्यंमेलितवांस्तदुत्तरमहो तद्दूरदृग्यन्त्रतः । ६४ ।

टि — भूभवः—मङ्गलः भार्गवः—शुक्रः तयोःग्रहयोः मिथोदूरताम्—परस्पर-दूरताम् ।

तस्मैतेन स दूरवीक्षणमथ क्षुद्रैकयन्त्रं कदा-
दृष्टं दर्शितवान् ग्रहाङ्गविततौ तद्यन्त्रशक्तिं तदा ।
जिज्ञासुं ह्यनुरुद्धवान् निजधिया तत्कार्यंकृत्यैस तं
यन्त्रणाशु निजेन तं स कृतवान् दत्तोत्तरो विस्मितम् । ६५ ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अन्वय:—अथ स: तेन कदाअदृष्टं दूरवीक्षणं क्षुद्रंकयन्त्रं तस्मैं दर्शितवान् । तदा ग्रहाङ्गवितती नद्यन्त्रशंवित जिज्ञासुं तं स: हि निजधिया तत्कार्यंकृत्यं अनुरुद्धवान् । निजेन यन्त्रेण आशु दत्तोत्तर: स: तं विस्मितं कृतवान् ।

टि—तेन—सामन्तेन । तस्मैं—सामन्ताय । स:—योगेश: स:—योगेश: स:—सामन्त: । ग्रहाङ्ग वितती—ग्रहाणाम् आयतनवृद्धिविषये ।

श्रीयुक्त: स युरोप पण्डितवरश्रीमटिकोन्नाह्वया
ज्योति: शास्त्रविदा समंतुलितवान् सामन्तचूडामणिम्
शेषे स्वीकृतवान् विमृश्यविषयं श्रेयस्त्वमस्याखिलं
सामन्त: कुशल: सुयोगरहित: सोऽभूत्तथातद्युत: । ६६ ।

टि—स:—योगेशचन्द्र: । अस्य-सामन्तचूडामणे: । श्रेयस्त्वम्—अतिशयेन प्रशस्यत्वम् । कुशल:—कृती । स:—टिकोन्नाहे: । तद्युत:—सुयोगेन युक्त: ।

पाश्चात्यो वुधसत्तमश्च कटके वैज्ञानिक:श्रीथिवेट्
साहेव:परिपृच्छ्य पञ्चनवच प्रश्नान् धरासूर्ययो: ।
यस्मैप्राप्तदुत्तर: परमुदा सद्धन्यवादं ददौ
तस्यप्रश्नचतुष्टयोत्तर कृतौ नाभूत् क्षम:किन्तु स: । ६७ ।

टि—धरासूर्ययो: अत्र वैषयिकाधारेसप्तमी । पञ्चनवच—चतुर्दश । यस्मै—सामन्ताय । तस्य—सामन्तस्य । स:—साहेव: ।

साहेव: करमर्दनं स कृतवान् गाढं तदा तस्यतत्
दृष्ट्वाश्रीमधुसूदनोहसुकवीराय: समीपस्थित: ।
योगेशश्च वभूवतुर्गुणिवरा वुदफुल्लवक्ष:स्थलौ
सामन्तोऽन्वभवत्तुकोमलकरे घस्रत्रयं वेदनाम् । ६८ ।

टि— घस्रत्रयं—त्रीणि दिनानि ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

साहेवंनच तेन सार्द्धमपरं साहेवयुग्मंस्थितं
तस्मादेकतरस्तदाकथितवान् सामन्तमानन्दितः ।
विद्वन् भूभ्रमणं वदिष्यसि यदि श्रीसवंकारस्त्वयि
संतुष्टो नितरां भविष्यति महानन्देन संस्थास्यसे ।६९।

ज्योतिःशास्त्रविशारदःक्षितितले कः कुत्रचित् पण्डितः
युक्त्या मन्मतखण्डनं यदि भवेत् कर्त्तुं समर्थस्तदा ।
ग्रन्थस्थां परिवर्त्तयामि मम भूस्थैर्यीयलेखावलिं
नोचेन्मन्मतमेवसाधुमतिमन्नित्याहयस्तंस्थिरः ।७०।

टि— परिवर्त्तयामि—परिवर्त्तयिष्यामि इत्यर्थः । अत्र वर्त्तमानसामीप्ये भूते भविष्यति च वर्त्तमानवद्वा इति लट्प्रयोगः । स्थिरः—स्थिरायाः स्थैर्यंवादे निश्चलइत्यर्थः ।

वारिष्टर् मधुसूदनश्चतुरधीःसर्वत्रसम्मानितो-
युक्त्या यस्य पराजितः सहृदयो नम्रःस्थितःसम्मुखे ।
प्रोवाचोत्कलचन्द्रमाईतिच यः सानन्दवद्धाञ्जलि-
र्यस्यज्ञानसुगौरवं प्रथितवान् देशे बिदेशे सदा ।७१।

टि— णिजन्त प्रथधातोः घटादित्वेनमित्त्वात् उपधाह्रस्वे क्तवतुप्रत्यये प्रथितवानिति रूपम् ।

तेन श्रीमधुसूदनेन सह वागालापकार्ये कदा
तं प्रोवाच सुतीक्ष्णधीरिति भवान् कश्चिद्विलाती नरः
तंस प्राह तदा मदस्ति खलु मे देशे सुधीमत्तरो-
यः काष्ठीयुगलेन मातिं गगनज्योतिर्गणान् पर्वतान् ।७२।

टि— वागालाप्कारी एकदा अथवा वागालापकार्ये कदा ।

कोविदवान् स इति प्रविस्मयमहौत्सुक्येन पृच्छाकृतं
साहेवं स तदा मुदा कथितवान् ख्याते पवित्रोत्कले ।
क्षुद्रे खण्ड़पडाभिधानकरदे राज्ये सुराजान्वये
जातोऽसौ खलु चन्द्रशेखरइति स्वीयाख्यया ख्यातिमान् ।७३।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सिद्धान्तादिक दर्पणं रचितवान् स ग्रन्थमत्युत्तमं
विद्वान् भूभ्रमवादखण्डनवचोयुक्त्यावलीमण्डितम् ।
इत्थं यद्गुणगौरवावलिकथामाचक्ष्य धीमान् स तं
मर्यादां निजजन्मभूमिजननीसम्बन्धिनीमैधयत् । ७४ ।

टि — सिद्धान्तादिकदर्पणं — सिद्धान्तदर्पणम् ।

वैलातप्रबलप्रतापसबलश्रीमन्त्रकारोगुण-
ग्राहीज्ञानगवेषणात्मक वृन्त् कर्म्माणि मर्मान्तरे ।
ध्यात्वा यस्य पदं महान्वितमहोपाध्यायइत्युन्नतं
भूभृत् पण्डितभद्रमण्डितसभासन्मण्डपे संददौ । ७५ ।

राधानाथ महोदयः कविवरो मर्मस्पृशा भाषया
यत्च्छाधां दरवान्पद्यगतया भक्त्या समेतोऽकरोत्
देशोद्देश्यसुसाध कोत्कलमणिःश्रीगोपबन्धुः पुनः
संक्षेपेण मनोज्ञया कवितया यस्य प्रशंसां जगौ । ७६ ।

गोलज्ञानविशेषसूक्ष्मधिशणः पाश्चात्यवैज्ञानिक-
प्राज्ञक्ष्माभ्रमवादखण्डनपटु विद्वत्सभामण्डनः ।
भक्तः श्रीधरनीलभूधरपतेः सुज्ञानिविज्ञाग्रणी-
र्यः सर्वज्ञसमोऽभवत्तनुभृतं वृन्देष्वहिंसःसदा । ७७ ।

टि— गोलज्ञानविशेषे सूक्ष्मा धिषणायस्यमः अथवा
गोलज्ञाने विशेषसूक्ष्मा धिषणा यस्य सः । सर्वज्ञेन—बुद्धेन समः—
तुल्यः । "सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः" इत्यमरः ।

ज्योतिःशास्त्रविचारकार्यकरणे नित्यं समासक्तवान्
स्त्रास्थ्यं विस्मृतवान् सुकर्मठतया निद्रादि संत्यक्तवान् ।
कालं यापितवान् वृथान समयं श्रेष्ठं धनं ज्ञातवान्
यः प्रातारजनीमुखेऽपिच जगन्नाथप्रभुं ध्यातवान् । ७८ ।

टि— निद्रादि अत्र आदिपदेन तन्द्रादीनां ग्रहणम् । "निद्रातन्द्राभयं क्रोध-
आलस्यं दीर्घसूत्रता षड्दोषा. । पुरुषेणेह हातव्या भूतिमिच्छता"
इत्युक्तदोषास्तस्मिन्नासन्निति भावः । प्रातः-प्रभाते । रजनीमुखे—
सन्ध्यायाम् ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


शीघ्रा शीघ्रादिभेदग्रहनिवहगतिक्रान्तिपातायनानि
शङ्कुच्छायाधनुर्ज्यापदकशरकलामानतत्साधनानि ।
यन्त्राविष्कार मष्टोत्तरशतसुपदभ्रान्तिशून्यान्पलांशान्
योब्रह्माण्डान्तरक्ष विविधवहुनवाविष्कृतिं चापिचक्रे । ७९ ।

टि— शीघ्राशीघ्रादि X X इत्यत्र आदिपदेन उच्चपातयोर्ग्रहणम् । शीघ्राशीघ्रोच्चपातभेदैःग्रहनिवहस्य गतिक्रान्तिपातायनानि । शरकलानां मानानि —शरकलामानानि— शरसंस्कारविशेष प्रमाणानि । शङ्कुच्छायाच धनुश्च ज्याच पदकानि च शरकलामानानि च तेषां साधनानि । अष्टोत्तर शतसुपदानाम्— अष्टाधिक शतप्रसिद्धदेशविदेशीयस्थानविशेषाणाम् । पलांशान्— सूर्योदयादिकालनिरूपकविभागविशेषान् ।

सत्येनैवमहिंसयोन्नतमना गान्धियथाविप्लवी
स्वप्रज्ञारचितस्वयंवहजुषा यो मानयन्त्रेण वै ।
ज्ञात्वामण्डलचक्रतत्त्वनिवहं कृत्वा नवं विप्लवं
भित्त्वा भिन्नमतान्यवाप विजयं संदर्शितादर्शकः । ८० ।

टि— गान्धियथा—गान्धिरिव । सामन्तपक्षे मण्डलानां—गोलानां चक्रं-समूहः तस्य तत्त्वानां—तथ्यानां निवहः—निकरः तम् । गान्धिपक्षे मण्डलस्य लक्षणया मण्डलाधीश्वरस्य अथवा मण्डले— स्वे देशे राष्ट्रे वा यत् चक्रं— राजकीयकूटचक्रं तस्य तत्त्वानि—तथ्यानि तेषां निवहः तम् । सामन्तपक्षे भिन्नमतानि ज्योतिर्विदां पृथक् पृथक् मतानि गान्धिपक्षे साम्राज्यवादहिंसावादादिसम्बन्धीनिमतानि । सामन्तपक्षे संदर्शितादर्शकः—संदर्शितसिद्धान्तदर्पणः । गान्धिपक्षे संदर्शितानुकरणीयसाधुविषयः । तात्पर्यार्थः—महात्मा गान्धीः यथा सत्याहिंसाद्वयेन नवं विप्लवं कृत्वा साम्राज्यवादविलोपं विधाय विजयी अभवत्, तथा सामन्तः स्वयंवहमानयन्त्रद्वयेन ज्योतिर्विषयक विभिन्नमतवादं खण्डयित्वा स्थूलगणनालोपेन सूक्ष्मगणनां कृत्वा विजयी वभूव ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अण्डानां वरगोलयन्त्ररचकोऽखण्डात्मनो ब्रह्मण:
पण्डातोषितपण्डितोत्तमगणोऽखण्डाववोधास्पदम् ।
खण्डास्वादवचो व्यवाहरत य श्चण्डालवर्गे च भू-
खण्डानां प्रविभागवोधविधिविद् भण्डालिवाक्खण्डक: । ८१ ।

टि— अखण्ड:-पूर्ण: आत्मा स्वभाव: यस्य तत् अखण्डात्म तस्य अर्थात् सर्वव्यापकस्य ब्रह्मण:—परमेश्वरस्य अण्डानां सूर्यादीनां लोकानाम् । अखण्डस्य—अक्षुण्णस्य अववोधस्य—सम्यग्ज्ञानस्यप्र सङ्गत: ज्योति: शास्त्रसम्वन्धिनइत्यर्थ: । आस्पदं—स्थानम् । भूखण्डानां— नव-खण्डविभागविभक्तानां प्रविभागा:—प्रकृष्टा:अंशा:तेषां वोध:—ज्ञानं तस्य विधि:—नियम: उपायो वा तं वेत्तीति तथाविध: । भण्डालि वाक् खण्डक:—धर्मध्वजिधूर्त्तजनवचनखण्डनकारी । चण्डालवर्गे—अनुन्नतजातिविशेषगोष्ठीनिकटे । अत्रसामीपिकाधार: । खण्डस्य—इक्षुविकारविशेषस्य आस्वादतुल्यं वच:—वचनम् ।

पण्डावद्भुवनेश्वराभिधं वृहत्पण्डादृतो य: खलू-
द्दण्डाबुद्धिबुभुत्सुशिष्यकटुवाग्दण्डार्पणे कुण्ठित: ।
खण्डाखण्डतिथिप्रमाणमकरोद्दण्डादि दृग्यान्त्रिक-
दण्डामण्डितपाणिरुत्तमविदैंलण्डाक्षणआकर्षक: । ८२ ।

टि— पण्डावता वेदादिशास्त्रोज्ज्वलबुद्धिसंपन्नेन भुवनेश्वराभिधेन वृहत-पण्ड़ा (वड़पण्ड़ा) इति उपनामधारिणा आदृत: । विनीतं प्रतिभाशालिनं सुशिष्यं गुरव: आद्रियन्ते । उद्दण्डा:-उद्धता: अबुद्धय:—बुद्धिहीना: बुभुत्सव:—ज्योति:शास्त्रवोधेच्छुका: ये शिष्या: तेभ्य: कटु:कठोर: वाग्दण्ड:—भर्त्सनादि: तस्यअर्पणे कुण्ठित:—कुण्ठावोध-मकरोदित्यर्थ: । यान्त्रिक-दण्डेन—स्वनिर्मितेन दारवेण वैणवेन वा यन्त्रदण्डेन आमण्डितौ पाणी—हस्तौ यस्यस: । उत्तमविद:—सुज्ञा: ये ऐंलण्डा:-इंलण्ड़देशवासिन: तेषां अक्षण: दृष्टे: आकर्षक: । अक्षण: इत्यत्र प्राण्यङ्गत्वा देकवद्भाव: ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


दण्ड़ादि पश्यतीति दण्ड़ादौ दृक् यस्य वा दण्ड़ादिदृक् दण्ड़ादिकाल-विवेचनां कुर्वन्नित्यर्थः । खण्ड़ानाम्—असंपूर्णानाम् अखण्ड़ानां संपूर्णानां तिथीनां प्रतिपदादि पञ्चदश्यन्तानामितियावत् । प्रमाणं निर्णयम् । संपूर्णातिथिः स्कन्दपुराणे दर्शिता—"प्रतिपत्प्रभृतयः सर्वाउदया दोदयाद्रवेः । संपूर्णा इति विख्याता हरिवासरवर्जिताः" । इति या तु नोक्तलक्षणा सा खण्ड़तिथिः । एतद्विषयक स्मृतिविचारः कालमाधवादौ द्रष्टव्यः । वाहुल्यभयान्मया न लिख्यते । देवपित्रादि कार्यकरणे तत्तद्यथोचिनकालव्यतिक्रमे महान् प्रत्यवायो भवेत् इति स्मृतिषु दृश्यते । ततःसामन्तमहोदयस्तद्विषये सावधानः सूक्ष्मकालविवेचनया तिथ्यादीनां ह्रास वृद्ध्यादिकं निर्णीतवान् ।

दण्ड़ानुग्रह दक्षिणः कमिशनर् दण्डान्तदेवार्च्चनं
दण्ड़ार्द्धं यदपेक्षय सहबुधैर्दण्ड़ायितोपाविशत् ।
चण्ड़ानां मददीपदीप्तिदमने चण्ड़ास्रकःसोऽभवत् ।
खण्ड़ान्तस्थपड़ासुतः सकलभूखण्ड़ावलीमण्ड़नः । ८३ ।

टि— दण्ड़ानुग्रहदक्षिणः—निग्रहानुग्रहसमर्थः दण्ड़ान्तदेवार्च्चनं – दण्ड़ावधि देवार्च्चनकारकम् । दण्ड़ार्द्धम् अत्र "कालाध्वनोरत्यन्त संयोगे" इति द्वितीया । सामन्तसाक्षात्काराथं कमिशनर महोदयस्य तद्द्वार गमनसमये दण्ड़ावधिकालार्द्धस्य देवार्च्चनकर्म्मणीअतिवाहितत्वात् दण्ड़ार्द्धं स सामन्तम् अपेक्षितवान् इति सुधीभिर्विभाव्यम् । दण्ड़ायिता—कियत्क्षणंदण्ड़ायमानः उपाविशत् उपविष्टः । मण्ड़प सज्जितासने इति यावत् । चण्ड़ानाम्—उद्धतानाम् । मदः—गर्वः एव दीपः तस्य या दीप्तिः तस्या दमने अर्थात्ह्रासकरणे चण्ड़ाः—प्रखराः अस्राः किरणाः यस्य सः चण्ड़ास्रकः सूर्यः—सूर्यतेजसा दीप दीप्तिः ह्रासं लभते । खण्ड़ान्तस्थपड़ा—खण्डपड़ा ।

दण्डादिक्षयवृद्धिसूक्ष्मगणना खण्ड़ादिविज्ञान्तिके
गण्डामण्डितकुण्डलाः सुगणकाः दण्डायिताः शिष्यवत् ।
गण्डादिस्मरणे वभूव खलु पौगण्ड़ात् प्रभृत्याग्रही
चण्ड़ानामपिहर्षकारिवचनो दण्ड़ान् मुदायोऽनयत् । ८४ ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

टि — दण्ड़ादीनांक्षयवृद्ध्योः या सूक्ष्मगणना तस्याः यः खण्ड़ः—विभागः तस्मिन् आदिविज्ञः—प्रथम विद्वान् । प्रसङ्गात् चन्द्रशेखरः तस्य अन्तिके—समीपे । गण्ड़ादीनां—अत्र आदिपदेन अतिगण्ड़, व्यतिपात, व्याघात, शुभ, शोभन प्रभृति योगानां ग्रहणम् । चण्ड़ानाम्—उग्राणां । दण्ड़ान्—तत्परिमितकालान् अनयत्—अयापयत् ।

खण्ड़ाध्वेक्षितनीलचक्रवलवद्दण्ड़ाग्रखेलध्वजोऽ-
खण्डानन्द कृताञ्जलिर्हरिपुरो दण्डावपातोत्थितः ।
दण्ड्यान् मां परिपास्यसीतिसकलाद्दण्ड्यावधिज्ञापयन्
पण्डादत्तपदाम्बुजाम्बुतुलसीखण्डादनं स व्यधात् । ८५ ।

टि— वलवान्—शक्तः यो दण्डः तस्य अग्रे खेलन्—क्रीड़न् उड्डीयमान इति यावत् स चासौध्वजश्चेति वलवद्दण्डाग्रखेलध्वजः । नीलचक्रं च वलवद्दण्डाग्रखेलध्वजश्चतौ । अथवा समाहारे क्लीवैकवचनम् । खण्डाध्वनः अल्पावशिष्टमार्गात् ईक्षितौ नीलचक्रवलवद्दण्डाग्रखेलध्वजौ येन सः तथाविधः । अखण्डेन—पूर्णेन आनन्देन कृतः अञ्जलिः येन सः अखण्डानन्दकृताञ्जलिः । हरेः—नीलाचलराजस्य श्रीमज्जगन्नाथस्य पुरः—अग्रतः । दण्डस्य—यष्टेः इव अवपातः—भूमौ पतनं यस्य सः तादृशः, ततः कर्म्मधारयः । अथवा दण्डावपातात् परम् उत्थितः-दण्डावपातोत्थितः । सकलात् दण्डात् त्रितापजनितदुःखात्मकात् पराभवात् यमयातनायाश्च । पण्डा—जगन्नाथसेवकविशेषः तेन दत्तस्य पदाम्बुजाम्बुना—श्रीचरणकमलोदकेन सहितस्य तुलस्यखण्डस्य अदनं—भक्षणं व्यधात्—अकार्षीत् ।

दण्डार्हान् शरणागतान् समवतश्चण्डातपस्यात्मभू-
दण्डाद्द्यस्यरथे पुरीगजपतिश्चण्डाललोकायते ।
चण्डालोऽपिहि यत्पुरेऽमृतमियाच्चण्डापराधीमृतो
चण्डात्मात्मसमर्पणं स कृतवान् दण्डायमानःपुरः । ८६ ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


टि— दण्डार्हान् – दण्डयोग्यान् शरणागतान्—आश्रयार्थिनः। चण्डातपस्य सूर्यस्य आत्मभूः—आत्मजः—यमः तद्दण्डात् समवतः—संरक्षतः यस्य—जगन्नाथस्य चण्डाललोकइव आचेरतिचण्डाललोकायते। स्वर्णसम्मार्जन्या सम्मार्जनं करोति। सम्मार्जन्या मार्गपरिष्करणं चण्डालस्य कर्म्म। यत्पुरे—यन्नगरे पुरुषोत्तमक्षेत्रइत्यर्थः। चण्डापराधी—उत्कटपातकी अमृतं—मुक्तिम् :
"मुक्तिःकैवल्यनिर्वाण श्रेयोनिःश्रेयसामृतम्" इत्यमरः। इयात्—प्राप्नुयात्। इण् गतौ। पुरः—अग्रे। तस्य इति शेषः यत्तदोर्नित्यसम्बन्धात्। अचंडः—शान्तः आत्मा—स्वभावः यस्य सः अचंडात्मा सः पूर्वोक्त चन्द्रशेखरः।

हर्याख्यास्मृतिकीर्त्तनो बुधमुदःस्थानंस्थिरात्मोदयो-
राजात्मप्रभवो गुरुः सुमनसां ज्योतिः प्रसिद्धःकविः।
स श्रीभास्कर शक्तिशालिजननः शश्वद्विधौ तीक्ष्म दृक्
विश्वव्याप्त प्रसिद्धिकेतुरभवत्तद्वद्ग्रहध्यानतः। ८७।

टि— सः चन्द्रशेखरः शश्वत्—सर्वदा ग्रहध्यानतः—वारम्वारग्रहगवेषणया इत्यर्थः तद्वत् ग्रहवत् अभवत्।
सूर्यपक्षे हर्याख्यायाः-हरिनाम्नः स्मृतिषु कीर्त्तनं यस्य सः। सा पक्षे हर्याख्यायाः—हरिनाम्नः स्मृतिः स्मरणं कीर्त्तनं—वारम्वारमुच्चारणं च येन सः।
चन्द्रपक्षे बुधस्य मुद्—हर्षः तस्याः स्थानम्। बुधस्यचन्द्रात्मजत्वात्। सा पक्षे बुधानां—देवानां पंडितानां च मुदः—हर्षस्य स्थानम्। पूजास्तोत्रपाठादिना देवानां, सम्मानप्रदर्शनपूर्वकशास्त्रचर्चादिना पंडितानां परितोषकारित्वात्। सामन्तस्य पांडित्यप्रकर्षदर्शनात् साधुव्यवहाराच्च पंडिता आनन्दिता अभवन्।
मङ्गलपक्षे स्थिरायाः पृथिव्याः आत्मोदयाः आत्मप्रकाशः यस्य सः मङ्गलस्य भूमिपुत्रत्वात्। सा पक्षे स्थिरात्मना—अविचलित स्वभावेन उदयः—आविर्भावः यस्य सः। अथवा स्थिरः-अचलः आत्मोदयः—आत्मोन्नतिः यस्य सः।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

बुधपक्षे राजा—चन्द्रः तस्मात् आत्मप्रभवः अथवा राजा—चन्द्रः तस्यआत्मनः प्रभवः—उत्पत्तिः यस्य सः। सा. पक्षे राजा—क्षत्रियः श्यामबन्धु सिंहसामन्तः तदात्मनः प्रभवः—जन्मयस्यसः। बृहस्पति-पक्षे सुमनसां—देवानां गुरुः। सा. पक्षे सुमनसां-गदाधरविद्याभूषण राजवल्लभ मिश्रप्रमुखानां पण्डितानां गुरुः—ज्योतिःशास्त्राध्यापकः। शुक्रपक्षे ज्योतिःषुप्रसिद्धः—ज्योतिःप्रसिद्धः कविः—तन्नामधारी। उशनाभार्गवः कविरित्यमरः। सा. पक्षे ज्योतिशास्त्रप्रसिद्धःकविः। सिद्धान्तदर्पणग्रन्थरचक इत्यर्थः।

शनैश्चरपक्षे श्रीभास्करात्—श्रीसूर्यात् शक्तिशालि वलिष्ठं सामर्थ्य-युक्तं जननं—जन्म यस्य सः।

सा. पक्षे श्रीभास्करः—श्रीभास्कराचार्यः तस्यइव शक्तिशालि जननं यस्य सः।

राहुपक्षे विधौ—चन्द्रे तीक्ष्णा—उग्रा दृक्—दृष्टिः यस्य सः। सा. पक्षे विधौ—शास्त्रीयनियमे तीक्ष्णा—सूक्ष्मा दृक् यस्य सः। केतुपक्षे विश्वे—जगति व्याप्ता प्रसिद्धिर्यस्यसः स चासौकेतुश्चेति। सा. पक्षे प्रसिद्धिःएवकेतुः—प्रसिद्धिकेतुः कीर्त्तिपताकाइत्यर्थः। विश्व व्याप्तः प्रसिद्धिकेतुः यस्य सः।

शश्वत्सद्गुणरत्नभूषितवपुःसर्वंसहास्थैर्यभृत्
माता श्रीपरमेश्वरस्यभुवने नानातनूधारिणाम्।
दुर्वाश्यामलचारुविग्रहरुचि विश्वम्भराख्या श्रुतिः
सोऽभून्मङ्गलभावभाजनमसौभूभावनात्तत्समः। ८८।

टि— सः असौ भूभावना तत्समःअभूत्। भुवः भावनया तत्समः भूतुल्यः। भूमिपक्षे शश्वत्—सर्वदा सन्—उत्तमः गुणः—प्रयोजनं यैः तानि सद्गुणानि यानि रत्नानि [तैः भूषितं वपुःयस्याः सा भूमेःवसुन्धरा-त्वात्। सा. पक्षे सद्गुणाः दयादाक्षिण्यविनयादयः एव रत्नानि तैःभूषितंवपुः यस्य सः।

भूमिपक्षे सर्वंसहाचासौ स्थैर्यभृच्चेतितथाभूता। सा पक्षे सर्वंसहा—वसुमती, साइव स्थैर्यंभृत्। अथवा सर्वंसहायाः पृथिव्याः स्थैर्यम् अचलत्ववादमित्यर्थः विभर्त्ति—पुष्णातीति

CC-0. Prof. Satya Vrat Shastri Collection.

